शिष्टशक्तिज्ञानस्य, सर्वमते लोमवन्मुख्यविशेष्यकलोमप्रकारकफलजनकतया भवन्मते तदनुपपत्तेः; आशङ्काया एवाशुद्धत्वाच्च, पर्यायताभ्रमस्य पशुपदं लोमत्वशक्तमित्याकारकतया लोममुख्यविशेष्यकशाब्दबोधे बाधकाभावादिति ॥

इति श्रीरङ्गनाथसूरिसूनुनारायणानुजकृष्णभट्टविरचिता
शक्तिवादटीका मञ्जूषा सम्पूर्णा ॥

माधवी ।

शक्तिग्रहस्यैवेति । समवायसम्बन्धेन गोत्वप्रकारकज्ञानशक्तं पदमित्याकारकज्ञानस्यैवेत्यर्थः । तादृशबोधहेतुत्वात्=समवायसम्बन्धेन गोत्वप्रकारकशाब्दबोधहेतुत्वादित्यलम् ।

इति तर्कसिद्धान्तश्रीमाधवशर्म्मविरचिता शक्तिवादविवृत्तिः समाप्ता ॥

विनोदिनी ।

शक्तिलक्षणाज्ञानयोः कारणतामनुगमयति—यस्त्विति ।

सम्बन्धान्तरवत्तयेति । कालिकादिसम्बन्धवत्तयेत्यर्थः । एवं सतीति । जातिमात्रशक्तिमते नियमतो समवायाभाने सतीत्यर्थः । समवायासाधारण्येनेति । समवायस्य वाच्यान्तर्भावो, न कालिकस्य सम्बन्धादेरिति सर्वमवदातम् ॥

इति कलिजनपावनावतारभक्तजीवजीवातुपरमपुमर्थप्रेमवितरणपरायण-
भगवच्छ्रीश्रीकृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकश्रीवृन्दावनस्थ-
स्वयंप्रकटश्रीश्रीराधारमणचरणपरिचरणैकसर्वस्व-
श्रीन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य्यतर्करत्नन्या-
यरत्न **गोस्वामिदामोदरशास्त्रिणा** रचिता शक्तिवादविनोदिनी संपूर्णा ।